कृतयुगस्य कालस्तु अष्टाविंशतिसहस्राधिकसप्तदशलक्षात्मकः । त्रेतायुगस्य तु षण्णवतिसहस्राधिकद्वादशलक्षात्मकः । द्वापरस्य तु चतुःषष्टिसहस्राधिकाष्टलक्षात्मकः । कलियुगस्य तु द्वात्रिंत्सहस्राधिकचतुर्लक्षात्मकः । इमानि चत्वारि युगानि मिलित्वा एकः पर्ययो भवति । एवं सहस्रं पर्ययाः यदा भवंति तदा ब्रम्हदेवस्य प्रातरारभ्य सायंपर्यंतम् दिनं भवति । तावत्येव रात्रिः एवं दिवानिशं गृहीत्वा ब्रम्हणः एको दिवसो भवति । तस्य दिवसस्य अपरंनाम कल्पइत्याकारकमस्ति । एवं कल्पानां षष्ट्यधिकत्रिशतं यदा भवति तदा ब्रम्हणः एकं वर्षं भवति अनेन प्रमाणेन ब्रम्हणः आयुः शतवर्षपरिमितमस्ति । नूतने कल्पे समारब्धे सति नूतना सृष्टिरुत्पद्यते । तस्माद्यदि वेदाः सत्याः भवेयुस्तर्हि एवं विधाश्चमत्काराः मनुष्येण स्वयं स्वतंत्रत्वेन ज्ञातुं न शक्यंते । जगतः सत्यस्वरूपं इतिहासं लिखितुं पाषाणलेखाः प्राचीनपत्राणि ताम्रलेखाश्च मृत्तिकायाः पाषाणस्य च रचनाक्रमाः तथैवच तत्र संशोधिताः वनस्पतयः प्राणिनश्च इत्यादीनि साधनानि यथा मनुष्याणां संति तथा जगतः उत्पत्तेः प्राक् सत्यं इतिहासं ज्ञातुं मनुष्याणां साधनानि न संति ।

५ पुरात्वेवं निर्णीतं यत् वेदस्थं सर्वं सत्यज्ञानं परमेश्वरबुद्धिस्थं विद्यते एतस्मात् मनुष्याणां जगत्सु उत्पत्तेः प्राक् यत् ईश्वरबुद्धिस्थं ज्ञानमासीत् तदेव ज्ञानं जगत्सु मनुष्याणां सृष्टयुत्तरं मनुष्येण कृतमिति भाषणमप्रयोजकमस्ति ।

६ यदि च केनापि नृणा वेदाः कृताः स्युस्तर्हि अहमेतेषां कर्त्तेति स्वस्याभिधेयं कुतो न लिखितवान् । यदि कर्त्ता स्यात्तर्हि तस्य स्वनामालेखने किमपि कारणं नास्ति । वेदात्मकः ग्रंथः एवं विधोनास्ति यत्तत्र कर्त्रा स्वनाम लिखितं चेत् तस्य नाम्नः कलंकः लगिष्यति । वेदेषु नानाविधाः अतिमहत्वद्योतकाः विद्याः परिपूर्णाः संति । किंच तत्र कर्त्तेति नामलेखनं इयतीं प्रतिष्ठां समुत्पादयति यत् सत्यं कर्त्ता स्यात् तर्हि स स्वीयं नाम लिखितुं कदापि न विरमेत् । किंच वेदं विना अंन्ये ग्रंथाः दृष्टाश्चेत्

ग्रंथकर्त्तारः ग्रंथेषु स्वनामानि लिखंति एवं प्राचीनकालमारभ्य शिष्टसंप्रदायो विद्यते ।

७ वेदेषु तावदनेकविधाः विद्याः पूर्णरूपेण निर्दोषतया च कथिताः संति । किंच तत्र भूतवर्त्तमानभविष्यत्कालिकाः वृत्तांताः निवेदिताः । तस्मात् वेदाः मानवज्ञानशक्तिमतिक्रम्य विद्यंते । पृथिव्यां मानवसृष्ट्यनंतरं अद्यदिनावधि अनेकशः विद्वांसोऽभवन् तथापि वेदसमानः स्वल्पोऽपि ग्रंथः केनापि मनुष्येण रचयितुं न शक्तः । किंचाग्रेऽपि तादृशः ग्रंथः मनुष्येण रचयितुं न संभवनीयोऽस्ति ।

८ यदि वेदानां कर्त्ता कश्चिन्मनुष्यः स्यात् तर्हि स महाविद्वान् सन् अतिप्रसिद्धः स्यात् तादृशः मनुष्यः ग्रंथं प्रसिद्धिं नीत्त्वा स्वस्य नाम कापट्येन गोपितं कृत्वा संस्थापयेत् तथापि तत्सर्वं अन्येनाज्ञातं नैव स्यात् ।

९ अप्रतिमस्य वेदरूपग्रंथस्य कर्त्तेति कस्यचित्पुरुषस्य नाम तत्र संयोजनीयं भवेत् तर्हि स स्वस्य भूषणमिति मत्वा तत्र स्वस्य नामसंयोजनं विना कदापि नैव व्यरमत् यतः एवंरीत्या तस्य नाम अजरामरं भविष्यत्येव ।

१० केनापि पुरुषेण वेदाः कृतास्तस्यापि तत्र स्वस्य अभिधेयं कापट्येन न प्रकाशितं तर्हि एतादृशं कापट्यं एतद्दिनपर्यंतं आच्छादितं कथं स्यात् । अधुनाहि महान्तो विद्वांसो न भवंति । एवमेव न अपितु प्राचीनपंडितकृतानां ग्रंथानां ज्ञातारोऽपि विरलाः उपलभ्यंते । एवं प्राचीनकालिकस्थितौ सत्यां तदानींतनविदुषां मध्ये कोऽपि तादृशं कापट्यमाविष्कर्त्तुं न शक्नुयात् किं । अपि तु शक्नुयादेव । अधुनापि एवं कापट्यं सिद्धिं नेतुं शक्यमस्तिकिम् । अपि तु नैवेत्यर्थः । सर्वसंमतस्य उत्कृष्टस्य वेदरूपग्रंथस्य संबंधेन तु तत्कर्त्तुर्नामात्यावश्यं प्रसिद्धिं यायादेव ।

११ यद्येवं गृहीतं यत्केनाचित्पुरुषेण वेदाः कृतास्तदा कर्त्तारंविना अन्ये सर्वे जनास्त्वेवं अज्ञाः आसन् यत ग्रंथोनाम किम् ग्रंथकर्त्ता नाम

किम् इदमपि ते नैवाजानन् । अतः केनचिन्मनुष्येण ग्रंथं कृत्वा स्वनाम नैवलिखितं अथवा स्वनाम गोपितम् इदं च कपटं तिरोभूतमासीत् । तर्हि एवंभूतानामज्ञानां समाजे महतः अत्युत्तमस्य सार्वकालिकसंमतस्य वेदात्मकग्रंथस्य कर्त्ता उत्पद्येत इदमसंभवनीयमस्ति । किंचाशक्यमप्यस्ति एवमपि वक्तुं शक्येत ।

१२ यथा आर्याः वेदेषु तथैव यवनाः कुराणेषु ख्रिस्ताः बायबलेषु पारशीकाः झेंडाविस्टेषु एवं भिन्नभिन्नजातीयाः पुरुषाः स्वीयस्वीयधर्मपुस्तकेषु एवं वदंति यदिदं मानवकृत्यं नास्तीति यदीदं कपटमिति वक्तव्यं तर्हि इयताम् लोकानां नयनेषु पूर्वमारभ्य एतद्दिनपर्यंतं कथं धूलिप्रक्षेपणं जातमिति महादाश्चर्यं भाति ।

१३ वेदेषु तावदृषीणां परस्परं संवादा उपलभ्यंते अत ऋषीणामुत्पत्यनंतरं वेदाः अभवन् इत्येवं प्रलपनं न युक्तम् । यतः ईश्वरः सर्वज्ञोऽस्ति तस्मात्तस्य भविष्यदृषीणां भाविजायमानान् संवादान् तेषां कृत्यानि च तदुत्पत्तेः प्राक् वेदरूपेण प्रकटीकर्तुं अशक्यं नास्ति ।

१४ यदि कश्चिदेवं शंकेत यद्वेदेषु परस्परविरुद्धानि वचनानि संति तस्माद्वेदः मनुष्येण कृतः तर्हि तस्येदमुत्तरमस्ति । यत् वेदे विरुद्धानि वचनानि संति इति ब्रूते इदं तावत्तस्य मौर्ख्यमस्ति । यतः शंकराचार्यैस्तथा मध्वाचार्यैः तद्भिन्नैरन्यैरप्याचार्यैः स्वीयस्वीयग्रंथेषु कतिपयानां विरोधानां परिहारं प्रदर्श्य तथैव चान्ये विरोधाः परिहरणीयाः इति दिग्प्रदर्शनं कृतं वर्त्तते । तद्वच्च ब्रम्हसूत्राणां द्वितीयेऽध्याये विरोधपरिहारविचारोऽस्ति । तस्मात् पूर्वोक्ता शंका निराधारेति निर्णीतं भवति ।

१५ वेदेषु तु अतिमानवानि लोकोत्तराणि च कृत्यानि संति । तानि च परमेश्वरस्य अघटितघटनां विना भवितुमशक्यानि । यदि वेदाः सत्याः संति तर्हि वेदे विद्यमानानि अमानुषाणि सर्वकृत्यानि मनुष्यः स्वकीयाल्पबुद्धया परमार्थतः तानि सर्वाणि संलिख्य स्थापितवान् इदं भाषणं सयुक्तिकं न भवति ।

एतावत्कालपर्यंतं वेदविषयकं यत्किमपि कथितं तत्सर्वं वेदाः सत्याः संति वानवा एतदवलंब्य विद्यते। अतः संप्रति वेदेषु यत्कथितं तत्सत्यं मिथ्यावेति विषये विचारणीयमत्यावश्यकमस्ति। वेदेषु यत्कथितं तत्सर्वं सत्यमस्तीत्येवं सुनिश्चितं गृहीतुं यानि कारणानि संति तानीत्थं—

१ यदि वेदाः मनुष्यकृताः न संति तर्हि तत्र अज्ञानस्य मिथ्याज्ञानस्य वासंभावनापि न भवेत्।

२ यदि वेदे ईश्वरबुद्धिस्थं ज्ञानमस्ति तर्हि वेदे सत्यत्वेनावश्यं भाव्यम्।

३ अन्यविषयकं विचारमकृत्वा केवलं उपनिषत्संबंधिनि विचारे क्रियमाणे सति एवं लभ्यते यथा अंकगणितेषु विद्यमानो विषयः सत्योऽस्तीत्यत्र प्रमाणमंकगणितमेव स्वतःसिद्धं प्रमाणमस्ति तथैव वेदः सत्योऽस्तीत्यत्रापि उपनिषदेव स्वतःसिद्धं प्रमाणं विद्यते।

४ व्यवहारेषु तावदिदमस्ति यत्कोऽपि पुरुषः बहून् वृत्तांतान् कथयति ते च सत्याः संतीति उपलभ्यते। तर्हि यावत्तस्य मनुष्यस्य अप्रामाण्यं नोपलभ्येत तावत्सः प्रामाणिक इति लोकाः जानंति। तथैव च वेदे यदुपलभ्यते तत्र किंचिदसत्यमस्तीत्यस्य उपलब्धिपर्यंतं सप्रामाणिक इत्येवमवश्यं स्वीकरणीयमेव।

५ चार्वाकास्तदन्येनास्तिकाश्च प्रत्यक्षप्रमाणंविना अन्यत्प्रमाणं नास्तीति मन्यंते। तेऽपि वेदाः मिथ्येति प्रत्यक्षप्रमाणबलेन साधयितुं न शक्नुवंति।

६ अद्यावधि बहवो विद्वांसोऽजायंत परंतु तेषु कश्चिदेकोऽपि वेदेषु अमुकभागः मिथ्येति न दर्शितवान्।

७ स्मृतयः पुराणानि व्याससूत्राणिचेत्यादीनामुत्तमग्रंथानां निर्मातारोऽपि व्यासप्रभृतिमन्वादयः श्रुतिं प्रमाणीकृत्य तामवलंबंते। तस्मात् महाजनोयेन गतः सपंथाः इति न्यायमनुसृत्य विचारिते सति वेदः सत्य इति ज्ञात्वा वर्त्तनं करणीयम्। व्यवहारेऽपि एवमेव वयं अनुपदं वर्त्तामहे यथा नदीमुत्तीर्य गंतव्यमस्तिचेत् क्व नद्या उत्तरणमार्गोऽस्तीत्येवं वृद्धं प्रति पृष्ट्वा पश्चात् नद्यां पदं निक्षिपामः यस्मिन्कस्मिन्नपि कार्ये यथा

बुधाः वृद्धाश्च वर्तंते तथैव वर्त्तनं प्रामाणिकं मत्वा तदनुसारेण वयमपि वर्त्तामहे ।

८ परिणामेत्विदमवश्यं मनसि धारणीयं यत्प्रतिवस्तु अनुभूय पश्चात्सत्यमिति मन्यामहे इति विचारणा कदापि न चलिष्यति ।

९ अद्य भूगर्भशास्त्रंज्योतिःशास्त्रंचेत्यादिशास्त्रेषु ये ये विषयाः प्रतिपादिताः संति । तेषां विषयाणां वेदैःसह विरोधोनास्तीत्येवं न। अपितु जगतः उत्पत्तिः केन प्रकारेण जाता कदा जातेत्यादीनां आधुनिकसंशोधितानां विषयाणां वेदप्रतिपादितविषयैः सह विरोधोनेत्येवं न । परंतु नूतन नूतनाश्च ये चमत्काराः वस्तुतः संशोध्य निष्कासिताः तैः सह वेदप्रतिपादितानां विषयाणां मेलनं पूर्णस्वरूपेण भवति ।

१० अस्मिन्भरतखंडे अद्यावधि ये महांतः आस्तिकाः पंडिताः अजायंत विद्यंते च ते सर्वेऽपि वेदाः सत्याः संतीत्येवं जानंति ।

११ परमेश्वरः वेदमन्यस्मै कथितवान् । स च परमेश्वरः यथार्थवक्ताऽस्ति । तस्मात्तस्य वाक्यं ( वेदः ) सत्यमस्ति ।

वेदानां प्रामाण्ये कारणानि संति तानि यथा—

१ वेदेषु विद्यमानं ज्ञानमीश्वरबुद्धिस्थमस्ति ।

२ वेदः ईश्वरप्रणीतोऽस्ति।ईश्वरस्तुयथार्थवक्ता विद्यते । यो वै यथार्थवक्ता स आप्तइति कथ्यते । एवं तु नियमः आप्तवाक्यं प्रमाणमिति ।

३ चिरकालमारभ्य नानाकालिकाः नानादेशीयाः भिन्नभिन्नमतवादिनश्च अनेके विद्वांसः वेदस्तूत्कृष्टत्तमो ग्रंथ इति कृत्वा तं प्रमाणत्वेन मन्यंते ।

४ वेदेत्वमुकवृत्तांतः मिथ्येति कृत्वा तस्य प्रामाण्यं नास्तीति कोऽपि दर्शयितुं न शक्नोति ।

पृथिव्यां वेदाश्चत्वारः संति । ऋग्वेदोयजुर्वेदःसामवेदोऽथर्ववेदश्चेति। ऋग्वेदस्तु ब्रम्हणः पूर्वमुखान्निर्गतः तस्योपवेदआयुर्वेदोऽस्ति । अयंतुवेदः सस्वोपवेदः मूर्तिमांश्च सत्यलोके सदा निवसति । यजुर्वेदः ब्रह्मणः दक्षिण-

मुखान्निर्गतोऽस्ति । तस्योपवेदः धनुर्वेदोऽस्ति । सामवेदः ब्रम्हणः पश्चिममुखान्निर्गतः । तस्योपवेदः गांधर्ववेदोऽस्ति । अथर्ववेदः ब्रम्हणः उत्तरमुखान्निर्गतः । तस्योपवेदः स्थापत्यं नाम कलाशिल्पादि विद्यास्ति । ऋग्वेदप्रभृतीनां चतुर्णां मध्ये ऋग्वेदः मुख्योऽस्ति । मुख्यत्वेन ऋग्वेदांतर्गताः ऋचस्तु इतरेषु त्रिषु वेदेषु उपलभ्यंते । चतुरो वेदान् मिलित्वा श्रुतिरित्याकारकं नाम वर्त्तते । श्रुतिरित्यस्यार्थस्तु यत् श्रुतं नाम आकर्णितं तत् । एतस्मादेवं अनुमितं भवति यत् यदा च वेदाः प्रसिद्धिं गताः अथवा मंत्रद्रष्टृभिर्ऋषिभिश्च दृष्टाः तदा ते लिखिताः नैवासन्निति । श्रुतीनां भागास्त्रयः संति संहिता ब्राम्हणः आरण्यकं चेति । संहिता नाम मूलमंत्राः । ब्राम्हणो नाम मूलमंत्रोपरि टीकातुल्यं व्याख्यानं । आरण्यकं नाम उपनिषदः इति । प्रतिवेदं संहिता भिन्नास्ति । तां विना पदानि क्रमः जटाघनश्चेति अनेके संहिताया एव विकृतिरूपेण भेदाः संति । प्रतिवेदं ब्राम्हणाः अपि भिन्नाः संति । ऋग्वेदेतु ऐतरेयः कौषीतकीचेति द्वयं ब्राम्हणोऽस्ति । यजुर्वेदस्य द्वे शाखे एका कृष्णयजुर्वेदः अन्या शुक्लयजुर्वेदश्चेति । तदुपरि च यथाक्रमं तैत्तिरीयं शतपथश्चेति ब्राम्हणोऽस्ति । सामवेदे प्रौढं अद्भुतं चेति ब्राम्हणोऽस्ति । अथर्ववेदेतु गोपथ इति ब्राम्हणोऽस्ति । आरण्यकेतूपनिषदः संति । ता उपनिषदः अरण्ये पठनार्हाः । इति कृत्वा तासां आरण्यकमिति संज्ञा संजाता । प्रायशः सर्ववेदाः छंदोबद्धाः संति । केवलं यजुर्वेदस्य कश्चिद्भागः गद्यरूपोऽस्ति । ऋग्वेदसंहितायाः दश विभागाः संति । तं प्रति च मंडलमिति वदंति । मंडलस्य ये विभागाः संति तं प्रति सूक्तमिति वदंति । प्रतिसूक्तं प्रायशः दश ऋचः संति । ऋग्वेदे इंद्रादीनां देवतानां स्तुतयः संति । यजुर्वेदे यज्ञप्रकरणं विद्यते । सामवेदे ऋग्वेदांतर्गता एव ऋचः संति । तथापि तासां पठनं गायनरीत्या भवति । अथर्ववेदेतु अभिचारादिक्रियाणां मंत्राः संति । ब्राम्हणे प्रायः यज्ञक्रियाविषयकं कार्यमस्ति । आरण्यकेषु उपनिषत्सु च आत्मा परमात्माचेत्युभययोः परस्परसंबंधादिकं वर्णितं विद्यते ।

ऋग्वेदस्य एकविंशतिः शाखाः संति । यजुर्वेदस्य नवाधिकशतं शाखाः संति । सामवेदस्य सहस्रं शाखाः संति । अथर्ववेदस्य च पंचाशत् शाखाः संति । एवं चतुरो वेदान् मिलित्वा संकलनया अशीत्यधिकशतोत्तरसहस्रं शाखाः संति । प्रतिशाखं एकैका उपनिषद् विद्यते । तासु मुख्याः उपनिषदः अष्टोत्तरशतं संति । तास्तु यथा—ऋग्वेदस्य दश । शुक्लयजुर्वेदस्य एकोनविंशतिः । कृष्णयजुर्वेदस्य द्वात्रिंशत् । एवं यजुर्वेदस्य एकपंचाशत् । सामवेदस्य षोडश । अथर्ववेदस्य च एकत्रिंशत् । एतासांमध्ये यासां दशोपनिषद इति वदंति तास्तु यथा—ईशः केनः कठः प्रश्नः मुंडः मांडुक्यः तैत्तिरीयः ऐतरेयः छांदोग्यं बृहदारण्यकं चेति ।

वेदेषु स्वराः संति । तेतूदात्तः अनुदात्तः स्वरितश्चेति त्रिविधाः संति । इमान् स्वरान् पुस्तकेषु ताम्रमषीकया अक्षरोपरि ऊर्ध्वरेषया अथवा तिर्यक्रेषया दर्शयंति । एभिः स्वरैः अर्थे न्यूनाधिक्यं जायते । तद्यथा वेदे वृत्रासुरस्य इंद्रस्यच युद्धवर्णनं दत्तमस्ति । तत्र वृत्रस्तु कस्यचिदृषेः पुत्र आसीत् । तस्य पिता पुत्रेष्टिं कृत्वा देवाय प्रार्थितवान् । यन्मह्यं इंद्रशत्रुरित्याकारकः पुत्रो जायतामिति । परंतु एवं संपतितं यत् इंद्रशत्रुरिति पदस्य उच्चारणवेलायां अग्रिमपदे स्वरोच्चारः कर्त्तव्यः तमकृत्वा पाश्चात्यपदे स्वरोच्चारः कृतः । ततः प्रार्थनानुसारेण पुत्रः संजातस्तथापि दुष्टस्वरोच्चारेण तस्य परिणामः भयंकरः संजातः । सयथा इंद्रशत्रुरिति पदे अग्रिमपदे स्वरेदत्ते सति इंद्रस्य शत्रुः इंद्रशत्रुरिति षष्ठीतत्पुरुषसमासो भवति । तथा च इंद्रस्य नाशकः पुत्रः इति अर्थः जायेत । किंच पाश्चात्येंद्रपदे स्वरेदत्ते सति इंद्रः शत्रुः यस्य सइंद्रशत्रुरिति बहुव्रीहिसमासे जातेसति यस्य शत्रुर्नामनाशकः इंद्रः अस्ति एवं रीत्यार्थो भवति । तथा च इंद्रेण घातिष्यमाणः पुत्रः संजातः । एतस्मात्कारणात् इदं स्पष्ट भाति वेदोच्चारणे कर्त्तव्ये सति अपस्वरविषये प्रमादोनकार्यः । व्याकरणसंबंधेन स्वराणामुपयोगः कयारीत्याऽस्ति तत्सर्वं सिद्धांतकौमुद्यां अष्टाध्याय्यां च विस्तरेण लिखितं विद्यते ।

---

# नारायणोपनिषत्



श्रीवेदव्यासायनमः ॥ श्रीगुरुभ्योनमः ॥ अस्याः उपनिषदः प्रजापतितितिरिर्यादयोऋषयः । नारायणाख्यं परंब्रम्हैव देवता । अक्षरपरिगणनया केषांचित् छंदोबद्धानां त्रिष्टुबादिकं छंदो ज्ञातव्यं अन्येषां वाक्यरूपाणां तु न छंदः ॥

**अर्थ**—लक्ष्मीनारायणास नमस्कार असो. गुरूला नमस्कार असो. ह्या उपनिषदाचे ऋषि प्रजापति तितिरि इत्यादिक आहेत. ह्या उपनिषदाची देवता नारायण नामक परब्रम्ह आहे. ज्या ठिकाणीं छंद आहेत त्या ठिकाणीं अक्षरें मोजल्यावरून त्रिष्टुप् इत्यादि छंद आहेत असें जाणावें. इतर ठिकाणीं वाक्यरूप असल्यामुळें छंद नाहींत.

**हरिः ॐ । सहना ववतु । सहनौ भुनक्तु । सहवीर्यं करवावहै । तेजस्विनावधीतमस्तु । मा विद्विषा वहै । ॐ शांतिः शांतिः शांतिः ॥**

**टीका**—ब्रम्हविद्यांवक्तुं मध्यागतविघ्नपरिहारार्थं वेदपुरुषः शांतिं पठति ॥ सहनाववत्विति ॥ **नौ** गुरुशिष्यौ **सह** एकदैव **अवतु**[1] प्रविशतु आवयोः सन्निधीयतामित्यर्थः[2] । **नौ** गुरुशिष्यौ **सह** एव साकमेव **भुनक्तु**[3] अन्नादिदानेन पालयतु । व्याख्यानविषये **वीर्यं** सामर्थ्यं **सह करवावहै**

---

१ अवरक्षणगतिकांतिप्रवेश इत्यादि धातुपाठः ।

२ अथवा सः मित्रादिः नौगुरुशिष्यौ विघ्नान् परिहृत्य अवतु रक्षतु हातिमित्रादेः रक्षणे सामर्थ्यमस्तीति प्रसिद्धमिति दर्शयाति ।

३ भुजपालनाभ्यवहारयोः ।

४ दिव्यांतरिक्षभौमानिष्टनिरासाय शांतिरित्यस्य त्रिरुक्तिः । यद्वा आध्यात्मिकाधिभौतिकाधिदैविकानिष्टनिरासाय त्रिरुक्तिः ।

साकं आचराव । **तेजस्विनौ** वर्चस्विनौ आवां भवाव । **अधीतं** आवयोः अध्ययनं **अस्तु** फलप्रदमस्तु । यद्वा **नौ** आवाभ्यां **अधीतं** अध्ययनं **तेजस्वि अस्तु । मा विद्विषावहै** विद्याग्रहणनिमित्तं शिष्यस्य गुरोर्वा प्रमादकृतापराधात्प्राप्तं विद्वेषं नैव करवाव । **ॐ** ॐपदवाच्येन परमात्मना **शांतिः** अस्तु **शांतिः** अस्तु **शांतिः** अस्तु ॥

**अर्थ**—[ ब्रम्हासंबंधीं ज्ञान सांगण्याकरितां मध्यें येणाऱ्या अडचणी दूर करण्यास्तव वेदपुरुष शांतिपाठ म्हणतो. ] आम्हा गुरुशिष्यांसन्निध ( परमात्मा ) एकाच वेळीं येवो; आम्हा गुरुशिष्यांना ( परमात्मा ) एकाच वेळीं अन्नादिक देऊन रक्षण करो; ब्रम्हविद्येच्या व्याख्यानाविषयीं आम्हीं उभयतां बरोबरच बळ लावूं; आम्ही उभयतां वर्चस्वी होऊं[1]; आम्हा उभयतांचें अध्ययन फल देणारें होवो; ब्रम्हविद्या शिकण्याच्या संबंधानें शिष्याकडून अथवा गुरूकडून बेसावधपणानें घडणाऱ्या अपराधांपासून जो द्वेष उत्पन्न होतो तो आम्ही उभयतां न करो. ॐ ह्या प्रणवानें सांगितलेल्या परमात्म्याकडून शांति असो, शांति असो, शांति असो.

**अंभस्यपारे भुवनस्यमध्ये नाकस्यपृष्ठे महतोमहीयान् ।**
**शुक्रेणज्योतींषिसमनुप्रविष्टः प्रजापतिश्चरतिगर्भे अंतः ॥**

**टीका**—तत्र प्रथमानुवाके काश्चिदृचः नारायणाख्यपरब्रम्हमाहात्म्यपराः । तत्राद्यां ऋचमाह ॥ अंभस्यपार इति ॥ **अपारे** निरवधिके **अंभसि** प्रलयोदके **महतः** चित्प्रकृत्यव्याकृताकाशादेः **महीयान्** उत्तमोऽधिकपरिमाणश्च[2] । **भुवनस्य** चतुर्दशभुवनस्य **मध्ये** मेरुलोकालोकपर्वतादेः महान् **नाकस्य** स्वर्गादेः **पृष्ठे** उच्चे ब्रम्हलोकादेः महीयान्[3] । स **शुक्रेण**[4]

---

१. किंवा आम्ही केलेलें अध्ययन तेजस्वी असो.

२ तत्वादधिमहानात्मामहतोव्यक्तमुच्यते ॥ अव्यक्तात्तुपरः पुरुषो व्यापकोलिंग एव चेति कठवल्ल्यां ।

३ तथाछांदोग्ये ज्यायान्पृथिव्याः ज्यायानंतरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य इति ।

४ तृतीयासहार्थे सहयुक्तेऽप्रधाने इतिपाणिनिसूत्रात् ।

सहितानि **ज्योतींषि** सूर्यादिषु **समनुप्रविष्टः प्रजापतिः** प्रजानां पालकः **गर्भे अंतः** ब्रम्हांडांतः **चरति** । अनेन मंत्रेण भगवतो महतोमहत्व प्रलयार्णवशायित्वसर्वज्योतिःप्रवर्त्तकत्वसर्वोत्तमत्वादिमहामाहात्म्यं वर्णितं भवति ॥

**अर्थ**—[ पहिल्या अनुवाकांत कांहीं ऋचा नारायणनामक परब्रम्हाचें माहात्म्य सांगणाऱ्या आहेत त्यांपैकीं पहिली ऋचा सांगतों. ] प्रलयकालच्या अनंत उदकामध्यें चित्प्रकृतीच्या पेक्षांही पलीकडे जो परमात्मा आहे तो, ज्याचें स्वतःचें परिमाण सांगतां येत नाहीं इतका मोठा आहे. तोच चवदा भुवनांमध्यें मेरु व लोकालोक ह्या दोन पर्वतांहीपेक्षां मोठा आहे. स्वर्गादिकांच्यापेक्षां फार मोठा जो ब्रम्हलोक त्याहीपेक्षां तो परमात्मा मोठा आहे. तोच परमात्मा आपल्या वीर्यानें सूर्यचंद्र इत्यादि तेजस्वि पदार्थांमध्यें तेजोरूपानें शिरून राहिला आहे. तोच सर्व ब्रम्हांडांत संचार करितो. ह्या मंत्रानें भगवंताचें मोठ्यापेक्षां मोठें असणें, प्रलयकालीं समुद्रांत निजणें, सर्व तेजांना प्रवृत्त करणें व सर्वोत्तम असणें इत्यादि मोठ्या माहात्म्याचें वर्णन केलें असें होतें.

**यस्मिन्निदꣳसंचविचैति सर्वं यस्मिन्देवाअधिविश्वेनिषेदुः । तदेवभूतंतदुभव्यमाइदंतदक्षरे परमे व्योमन् ॥**

**टीका**—द्वितीयामृचमाह ॥ यस्मिन्निति ॥ **यस्मिन्** प्रलयार्णवशायिनस्तदुदरे **इदं सर्वं** ब्रम्हादिसकलं जगत् प्रलये **समेति** परमात्मन्येकत्र संगतं भवति **च** सृष्टौ **व्येति च** तदुदरान्निर्गतं च प्रत्येकं निर्गच्छति । **यस्मिन्** मूलरूपे **विश्वे देवाः** समस्तब्रम्हादिदेवाः मुक्ताः अमुक्ताश्च **अधिनिषेदुः** नितरां स्वस्वयोग्यावयवेष्ववस्थिताः । **तत् एव भूतं** अतीतकालेस्थितं **तत् उ** एव **भव्यं** भविष्यत्कालेपि स्थितं **आ इदं** वर्त्तमानकालीनं च **तत् अक्षरे** अविनाशिनि **परमे** उत्तमे **व्योमन्** अव्याकृताकाशे

---

१ तस्य भासासर्वमिदं विभाति इतिश्रुतिस्तथाच सूत्रं अनुकृतेस्तस्यचेति ।
२ तथाचअमृतस्येषसेतुरितिश्रुतिर्मुक्तोपसृप्यव्यपदेशाच्चेतिसूत्रंच ।
३ सभगवः कस्मिनप्रतिष्ठितः इति प्रश्ने स्वेमाहिम्नीतिश्रुतेः ।

स्वमहिम्नि स्थितमस्ति । अनयाऋचामुक्तामुक्तसर्वाश्रयत्वं सर्वस्रष्टृत्वं व्याप्तत्वं कालत्रयेपि विद्यमानतया नित्यत्वमनन्याश्रयत्वं चोक्तं भवति ॥

**अर्थ**—[ दुसरी ऋचा सांगतो. ] प्रलयकालच्या उदकामध्यें शयन करणाऱ्या परमात्म्याच्या पोटांत हें सर्व ब्रम्हादिजगत् प्रलयकाळीं एके ठिकाणीं मिळतें, व तें सृष्टीच्या वेळीं त्याच्या पोटांतून एक एक बाहेर निघतें. ह्या मूलरूप परमात्म्यामध्यें मुक्त व अमुक्त असे सर्व ब्रम्हादिक देव आपापल्या योग्यतेप्रमाणें राहिले आहेत. तेंच रूप, भूत, वर्तमान व भविष्यकालीं असतें. तेंच अविनाशि व उत्तम अशा आकाशामध्यें आपल्या महिम्यावरच अवलंबून असतें. ह्या ऋचेनें परमात्म्याचे मुक्त व अमुक्त ह्यांना आश्रय असल्याचें, व सर्वांना उत्पन्न करण्याचे, व सर्वांना व्यापून असण्याचे व तिन्हीकालीं असल्यामुळें नेहेमी असणें, व त्याला दुसऱ्या कोणाच्याही आश्रयाची गरज नसणें, इत्यादि माहात्म्य वर्णिलें असें होतें.

**येनावृतं खंच दिवंमहींचयेनादित्यस्तपतितेजसाभ्राजसाच । यमंतः समुद्रेकवयोवयंति यदक्षरे परमेप्रजाः ॥**

**टीका**—तृतीयामृचमाह ॥ येनेति ॥ **येन** परब्रम्हणा तमसा **खं** अंतरिक्षं लोकं **आवृतं**[1] आच्छादितं **च दिवं** द्युलोकः **च महीं** भूलोकः **च** आच्छादिता । **येन** परमात्मना प्रेरितः **आदित्यः**[2] **तेजसा** तेजोयुक्तया **भ्राजसा** स्वीयमंडलकांत्या **तपति** प्रकाशयति । **यं** परमात्मानं **अंतः समुद्रे** क्षीरसमुद्रास्थितं **कवयः** तत्वज्ञानिनः **वयंति**[3] अवयंतिजानंतीत्यर्थः। **यत् अक्षरे**[4] यस्मिन् अविनाशिनि **परमे** परमात्मनि प्रजाः संति । अनया

१ नैनेनकिंचतेनावृतं नैनेनकिंचनासंवृतमितिश्रुतेः ।

२ तथाच गीतायां यदादित्यगतंतेजोजगद्भासयतेऽखिलं यच्चंद्रमसि यच्चाग्नौतत्तेजोविद्धिमामकमिति ।

३ अवेत्युपसर्गादिण्गताविति धातोर्लटि वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपेवयंतीति रूपं ।

४ तमक्षरं परं प्राहुः परतः परमक्षरं हरिमेवाखिलगुणमक्षरत्रयमीरितमिति प्रमाणसिद्धं ।

ऋचा हरेर्व्याप्तत्वसूर्यादिभासकत्वक्षीरसमुद्रस्थत्वसर्वाश्रयत्वादयो महिमानो वर्णिताः ॥

**अर्थ**—[ तिसरी ऋचा सांगतों. ] ज्या परमात्म्यानें अंधकारानें अंतरिक्ष झांकिलें आहे, आणखी स्वर्ग व पृथ्वी हीं झांकिलीं आहेत. ज्या परमात्म्याच्या आज्ञेनें सूर्य आपल्या तेजानें सर्व लोकांस प्रकाशित करतो, ज्या परमात्म्याला क्षीरसमुद्रामध्यें आहे असें विद्वान लोक जाणतात, व ज्या अविनाशी परमात्म्याच्या आश्रयानें सर्व प्रजा राहतात. ह्या ऋचेनें परमात्म्याचें सर्वव्यापकत्व, सूर्य इत्यादिकांना प्रकाशित करणें, क्षीरसमुद्रांत असणें सर्वांला आश्रय देणें इत्यादि महिमे वर्णिले आहेत ॥

**यतः प्रसूताजगतः प्रसूती तोयेन जीवान्व्यचसर्जभूम्यां यदोषधीभिः पुरुषान्पशूंश्चाविवेश भूतानिचराचराणि ॥**

**टीका**—चतुर्थीमृचमाह ॥ यतःप्रसूतेति ॥ **यतः** परमाक्षरात्परमात्मनः **जगतः** चेतनाचेतनात्मकप्रपंचस्य **प्रसूती**[1] प्रसूतिः **प्रसूता** पराधीनविशेषावाप्तिरूपोत्पत्तिमती **तोयेन** तत्तत्कर्मणा **भूम्यां** अधिभूमौ **जीवान्** प्राणिनः **व्यचसर्ज**[2] विविधसुरनरतिर्यगादिभेदेन ससर्ज । **यत्** यतः ब्रम्हा **ओषधीभिः** फलपाकांतैः व्रीह्यादिसर्वसस्यैः सहितान् **पुरुषान् पशून्** मेध्यादीन् **चराचराणि** स्थावरजंगमानि भूतानि सृष्ट्वा तत्प्रेरणाय **विवेश**[3] प्राविशत् । अनया ऋचा स्वप्रेरितचिदचित्प्रकृतिद्वारा **सर्वसर्जकत्वं सर्व**प्रेरणाय तत्र भगवतः प्रवेशश्च प्रतिपादित.

**अर्थ**—[ चवथी ऋचा सांगतों. ] ज्या परमात्म्यापासून हा स्थावरजंगम असा प्रपंच उत्पन्न झाला, त्यानें त्यामध्यें नानाप्रकारचे देव, मनुष्य, पशु, पक्षी, इत्यादिक जीवांना धान्यादिक वनस्पती सहित उत्पन्न केलें व तो परमात्मा ह्या सर्व जीवांना प्रेरणा करण्याकरितां त्यांच्या-

---

१ सुपांसुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालइति सूत्रेण पूर्वसवर्णः ।

२ अडागमश्छांदसः ।

३ तत्सृष्ट्वातदेवानुप्राविशादिति शिक्षोक्तेः ।

मध्यें शिरला. ह्या ऋचेनें परमात्म्यानें प्रेरिलेली जी जडाजड प्रकृति तिच्याद्वारा परमेश्वरच सर्व सृष्टि उत्पन्न करितो, व सर्वांच्या प्रेरणेकरितां सर्वांत परमात्मा प्रवेश करितो, हें सांगितलें आहे.

**अतः परंनान्यदणीयसꣳहिपरात्परं यन्महतोमहांतं । यदेकमव्यक्तमनंतरूपं विश्वंपुराणंतमसःपरस्तात् ॥ ५ ॥**

**टीका**—पंचमीमृचमाह ॥ अतःपरमिति ॥ **यत् अणीयसं**[1] अतिशयेनाणु **महतः** महत्तत्वात् **महांतं** महत् **परात्** प्रकृतेः **परं** श्रेष्ठं **यत् एकं** स्वगतभेदशून्यं **अव्यक्तं**[2] सर्वथाव्यक्तीकर्तुमशक्यं **अनंतरूपं** अजिताद्यनंतावताररूपं **विश्वं** पूर्णं **पुराणं**[3] पुरातनं **तमसः** प्रकृतेः अज्ञानात्वा **परस्तात्** अतिक्रम्य वर्तमानं प्रकृत्यादिबंधरहितं अस्ति । **अतः** परब्रम्हणः **अन्यत् परं** उत्कृष्टं श्रीब्रम्हादिसकलचेतनादुत्कृष्टं **न** नैवास्ति । अनया ऋचा परमात्मनोऽणोरणीयस्त्व महतो महत्व परात्परत्व निर्भेदत्वाव्यक्तत्वादयोऽनेके महिमानो वर्णिताः ॥ ५ ॥

**अर्थ**—[ पांचवी ऋचा सांगतो. ] जें परब्रम्ह अणूपेक्षां अणु, मोठ्यापेक्षां फार मोठें, मायेपेक्षांही श्रेष्ठ, ज्याचें संपूर्ण ज्ञान करून घेतां येत नाहीं असें, अनंत अवतार घेणारें, पूर्ण, फार प्राचीन कालचें, ज्याला अज्ञान मुळींच स्पर्श करीत नाहीं म्हणजे अज्ञानाचे कार्यबंध इत्यादिक नाहींत असें, आहे. ह्या परब्रम्हापेक्षां दुसरा कोणताही ब्रम्हादिक देव श्रेष्ठ नाहीं. ह्या ऋचेनें परमात्मा हा लहानापेक्षांही लहान आहे, व मोठ्यापेक्षांही मोठा आहे, व श्रेष्ठाहून ही श्रेष्ठ आहे, व भेदरहित आहे व अस्पष्ट आहे इत्यादिक त्याचे महिमे वर्णिले ॥ ५ ॥

**तदेवर्तंतदुसत्यमाहुस्तदेवब्रम्हपरमंकवीनां । इष्टापूर्तंबहुधाजातंजायमानंविश्वंबिभर्तिभुवनस्यनाभिः ॥**

---

१ तथाचश्रुतिरणोरणीयान्महतोमहीयानिति ।

२ तथाचसूत्रंतदव्यक्तमाहहि ।

३ पुराणिशरीराणिभणाति गच्छतीतिवापुराणं ।

**टीका**--षष्ठीमृचमाह ॥ तदेवर्तमिति ॥ **तत् एव** यस्मिन्निदमित्यारभ्ययदेकमव्यक्तमित्यंतेन सर्वाश्रयत्वादिनोक्तं यद्ब्रम्ह तदेव **ऋतं एव** यथार्थज्ञानरूपमेव । **तत् सत्यं** यथार्थज्ञानपूर्वकृतिमत् तु एव । **कवीनां** विदुषां मते **तत् एव परमं ब्रह्मं** अस्ति । **इष्टापूर्तं** यागादितटाकादिकं किंच **बहुधा जातं** सुरनरतिर्यगादिरूपेण बहुप्रकारेणोत्पन्नं **जायमानं** इदानीमुत्पत्स्यमानं जनिष्यमाणं च एतादृशं **विश्वं** संपूर्णं **भुवनस्य** चतुर्दशभुवनानि यस्यपरमात्मनः **नाभिः** नाभ्यार्पितपद्माख्यः पदार्थः **बिभर्ति**। अनया ऋचा नारायणस्य परब्रम्हत्वं चतुर्दशभुवनात्मकनाभ्यार्पितपुष्करवत्वं चोक्तं ॥

**अर्थ**—[ सहावी ऋचा सांगतो. ] " यस्मिन्निद " येथपासून प्रारंभ करून " यदेकमव्यक्त " ह्याच्या शेवटपर्यंत सर्वांचा आश्रय आहे म्हणून सांगितलेलें जें ब्रम्ह तेंच यथार्थज्ञानस्वरूप असून त्याप्रमाणें यथार्थ कृति करणारें आहे. विद्वान लोकांच्या मतानें तोच परमात्मा आहे. यज्ञ, याग, विहिरी, बावडी, देव, मनुष्य, इत्यादि जें उत्पन्न केलें तें, जें उत्पन्न होत आहे तें, व जें उत्पन्न होणार तें, अशीं सर्व चौदा भुवनें परमात्म्याच्या नाभिकमलानें धारण केलीं आहेत. ह्या ऋचेनें नारायण हा परब्रम्ह आहे व त्याला चतुर्दश भुवनात्मक नाभिकमल आहे असें सांगितलें ॥

**तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदुचंद्रमाः । तदेवशुक्रममृतंतद्ब्रम्हतदापःसप्रजापतिः ॥**

**टीका**—सप्तमीमृचमाह ॥ तदेवाग्निरिति ॥ **तत्** पूर्वोक्तं **ब्रम्ह एव अ**-

---

१ अथकस्मादुच्यते ब्रम्हेतिबृहंतो यस्मिन्गुणाइति श्रुतेः ।

२ भुवनस्येतिषष्ठी कर्मणि भुवनमित्यर्थः ।

३ अजस्यनाभावध्येकमर्पितं यस्मिन्निविश्वानिभुवनानितस्थुरिति विश्वकर्मसूक्तोक्तेः ।

ग्निः अंगांगनेता । तत् वायुः सर्वगतत्वसर्वज्ञत्वाभ्यां वायुशब्दवाच्यं । तत् सूर्यः सूरिगम्यत्वात्सूर्यशब्दवाच्यं । तत् उ एव चंद्रमाः आल्हादकत्वात् । तत् एव शुक्रं शोकरहितं अमृतं नित्यमुक्तं । तत् ब्रम्ह । तत् आपः आपालनात् । सः परमात्मा प्रजापतिः पूर्वोक्तप्रजापतिशब्दवाच्यः । अनया ऋचा अग्न्यादि सर्वशब्दवाच्यत्वं नामानिसर्वाणियमाविशंतीत्यादिश्रुतिप्रसिद्धमुक्तं ॥

**अर्थ**—[ सातवी ऋचा सांगतो. ] तो परमात्मा अंगाचें नियमन करणारा असल्या कारणानें अग्नि नांवाचा आहे. तो सर्वव्यापी व सर्वज्ञ असल्या कारणानें वायु नांवाचा आहे. तो विद्वान लोकांस प्राप्त होत असल्या कारणानें सूर्य नांवाचा आहे. तो आनंदकारक असल्या कारणानें चंद्र नांवाचा आहे. तो शोकरहित असल्या कारणानें शुक्र नांवाचा आहे. तो नित्यमुक्त असल्या कारणानें अमृत नांवाचा आहे. तो पालन करणारा असल्या कारणानें आप नांवाचा आहे. तो पूर्वीं सांगितल्याप्रमाणें प्रजापति नांवाचा परमात्मा आहे. ह्या ऋचेनें परमात्मा हा अग्न्यादि सर्व शब्दांनीं वाच्य आहे असें 'नामानिसर्वाणियमाविशंति' ह्या श्रुतींत स्पष्ट सांगितलें आहे ॥

**सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि । कलामुहूर्ताःकाष्ठाश्चाहोरात्राश्चसर्वशः अर्धमासामासाऋतवः संवत्सरश्चकल्पंतां ॥**

**टीका**—परमात्मनः सकाशात्सर्वसृष्टिमुक्त्वासर्वमध्यपतितनिमेषादिकालसृष्टिमाह ॥ सर्वे इति ॥ **विद्युतः** विद्योतमानात्सूर्यादिप्रकाशकत्वेनोक्ताद- ग्न्यादिशब्दवाच्यात् **पुरुषात्** जगत्सर्जकात् **सर्वे निमेषाः** अक्षिपक्ष्मच-

---

१ कृवापाजिमिसाध्यशूभ्यइतिसूत्रेणउण्प्रत्ययः ।

२ चंद्यतिआल्हादयतीति ।

३ शुचंरहतितत्यजति ।

४ आसमंतात्पालयतीति ।

लननिमित्तसूक्ष्मकालविशेषाः[1] **अधि** अधिकतया **जज्ञिरे** उत्पन्नाः। **का-ष्ठाः**[2] अष्टादश निमेषात्मकाः **कलाः** त्रिंशत्काष्ठात्मकाः ततः **मुहूर्ताः च अहोरात्राः सर्वशः** क्रमशः **अर्धमासाः**[3] **मासाः**[4] **ऋतवः**[5] **संवत्सरः च**[6] **कल्पंतां** उत्पन्नाः। अनया ऋचा भगवतः परमाण्वादिकालविशेषसर्जन माहात्म्यमभिहितं ॥

**अर्थ**—[ परमेश्वरापासून सर्व उत्पन्न झाल्याचें सांगून सर्वांमध्यें असणारा काल उत्पन्न झाल्याचें सांगतों. ] सूर्यादिकांना सुद्धां प्रकाश देणाऱ्या परमात्म्यापासून, डोळ्याच्या पापणीला हालण्यास जेवढा काल लागतो तेवढ्या कालाला निमेष म्हणतात, हा निमेष उत्पन्न झाला. अठरा निमेषांची एक काष्ठा, अशा तीस काष्ठा म्हणजे एक कला, अशा तीस कला म्हणजे एक क्षण, असे क्षण; बारा क्षण म्हणजे एक मुहूर्त, असे मुहूर्त; तीस मुहूर्त म्हणजे एक अहोरात्र, असे अहोरात्र; क्रमानें पंधरा अहोरात्र म्हणजे अर्धा महिना, असे दोन अर्धे महिने म्हणजे एक महिना; दोन महिन्यांचा एक ऋतु, असे सहा ऋतु म्हणजे एक वर्ष; अशीं वर्षें; हीं उत्पन्न झालीं. ह्या ऋचेनें भगवान हा अतिसूक्ष्म पदार्थ काल इत्यादिकांना उत्पन्न करितो असें त्याचें माहात्म्य सांगितलें ॥

**स आपः प्रदुघे उभे इमे अंतरिक्षमथो सुवः ।**

**टीका**—नवमीमृचमाह ॥ स आप इति ॥ **सः** पुरुषनामकः परमात्मा **आपः** अबुपलक्षितपंचमहाभूतानि तत्स्थानि वस्तूनि तदात्मकानि शरीरा-

---

१ अत्र निमिषा इति लवत्रुट्यादीनामुपलक्षणम्।

२ नलिनीपत्रसंहत्याः सूक्ष्मसूच्याविभेदने। दले दले तु यः कालः स कालो लव उच्यते। लवैस्त्रुटिः स्यात्त्रिंशद्भिर्निमेषस्तु ततोऽधिकः। निमिषापेक्षया अधिकाः काष्ठाः।

३ शुक्लपक्षकृष्णपक्षौ च।

४ सौरचांद्रादिमासाः।

५ मासद्वयात्मकाः वसंतादयः।

६ चशब्दात्परमाण्वादिकालाश्चोत्पन्नाः।

णिच प्राणिनामपेक्षितभोग्यजातंच **प्रदुघे**[1] संपादितवान् । तथा **इमे** इमे **अंतरिक्षं** अंतरिक्षलोकं तत्स्थानि भोग्यवस्तूनि संपादितवान् । **अथो** अपिच **सुवः** स्वर्गः तत्स्थानि भोग्यवस्तूनिच संपादितवान् ॥

**अर्थ**—[ नववी ऋचा सांगतों. ] परमात्म्यानें पृथ्वी, उदक, तेज, वायु, आकाश अशीं पांच भूतें, व त्या पांच भूतांमधील उपभोगास योग्य अशा वस्तू, पांच भूतांपासून झालेलीं शरीरें, व प्राण्यांना अवश्य लागणारे उपभोगाचे पदार्थ, हें सर्व निर्माण केलें. तसेंच अंतरिक्षलोक व त्यामधील उपभोगाचे पदार्थ, स्वर्गलोक व त्यामधील उपभोगाचे पदार्थ, हे परमात्म्यानें उत्पन्न केले ॥

**नैनमूर्ध्वंनतिर्यंचंनमध्येपरिजग्रभत्। नतस्येशेकश्चनतस्यनाममहद्यशः ॥ २ ॥**

**टीका**—ननुकाललोकादिसर्वत्रविद्यमानंनारायणाख्यंपरब्रम्हकुतोनदृश्यतइत्याशंक्यप्राकृतोर्ध्वत्वाद्याकाराभावादितिदशमीमृचमाह ॥ नैनमूर्ध्वमिति ॥ कश्चित् पुरुषः **एनं** परमात्मानं **ऊर्ध्वं** शालास्तंभवदूर्ध्वाकारं **न तिर्यंचं** उपरिस्थितशालावंशवत्तिर्यगाकारं **न मध्ये** ग्रहांतर्वर्तिपदार्थवत्मध्येऽवस्थितं **न परिजग्रभत्** न परिगृण्हाति[2] । **तस्य** ग्रहणे **कश्चन न ईशे** न समर्थः[3] । **तस्य महत् यशः नाम** सिद्धं अनंतत्वात् । अनया ऋचा भगवतः प्राकृताकाररहितत्वं अगम्यत्वं तत्कीर्त्यादिरन्यैरप्राप्यत्वंचोक्तं ॥ २ ॥

**अर्थ**—[ जर काल व लोक इत्यादि सर्व ठिकाणीं नारायणनामक परब्रह्म आहे, तर तें कां दिसत नाहीं अशी शंका घेऊन त्याला ऊर्ध्व इत्यादि प्राकृत आकार नाहींत असें उत्तर देण्यास्तव दाहावी ऋचा सांगतों. ] कोणीही पुरुष परमात्म्याला घराच्या खांबाप्रमाणें ऊर्ध्व आकाराचा

---

१ प्रउपसर्गात्दुहप्रपूरणेइत्यस्मात्धातोर्लिट् ।

२ परिउपसर्गात्ग्रहधातोःरूपंहृग्रहोर्भश्छंदसीतिसूत्रेणहकारस्यभकारः ।

३ तथाचश्रुतिःनतेमहित्वमन्वश्नुवंतिनतेविष्णोजायमानोनजातोदेवमहिम्नःपरमंतमापेति ।

आहे, घरावरच्या आडव्या वेळूप्रमाणें तिरपा आहे, घरांतील पदार्थांप्रमाणें मध्यें आहे, असें जाणूं शकत नाहीं; कारण कीं त्याला कोणताही प्राकृत आकार नाहीं. त्याला जाणण्याला कोणीही समर्थ नाहीं. त्याची कीर्ति अनंत असल्यामुळें त्याला अनंत असें नांव आहे. ह्या ऋचेनें भगवंताला प्राकृत आकार नाहीं व तो प्राप्त होण्यास कठिण आहे व त्याची कीर्ति इत्यादि दुसऱ्यांना मिळण्यासारखी नाहीं असें सांगितलें ॥ २ ॥

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनै-नं । हृदा मनीषा मनसाभि क्लृप्तो य एनं विदुरमृतास्ते भवंति ॥**

**टीका**—मुक्तिसाधनबिंबापरोक्षमपि न चक्षुरादिना भक्त्यादिसहितश्र-वणादिसंस्कृतमनसैवेत्याह ॥ न संदृशइति ॥ **अस्य** पुरुषाख्यस्य **रूपं संदृशे** सम्यग्ज्ञानाय **न तिष्ठति** न भवति । **कश्चन** कोप्यधिकारी **एनं** परमपुरुषं बिंबनामानं **चक्षुषा न पश्यति** न अपरोक्षी कुरुते । तर्हि सर्वथाअपरोक्षीकर्तुमशक्यएवेत्यत आह ॥ हृदेति ॥ **हृदा** स्नेहेन युक्तया **मनीषा** माहात्म्यबुध्या **मनसा** भक्तिसहितमनोरूपेंद्रियेण **अभिक्लृप्तः** आभिमुख्येन स्थितः भक्तिसहितश्रवणादिसंस्कृतमानसप्रत्यक्षाविषयः अ-स्ति । **ये** भक्ताः **एनं** परमात्मानं बिंबरूपिणं **विदुः** अपरोक्षी कुर्वंति **ते अमृताः** मुक्ताः **भवंति** । अनया ऋचा च मुक्तिसाधनीभूतापरोक्षज्ञानस्य मानसत्वमुक्तं ॥

**अर्थ**—[ मुक्तीला अतिशय अवश्य साधन असें जें आपल्या बिंब-रूपी परमात्म्याचें दर्शन आहे तें नेत्रादिक इंद्रियांनीं होणें अशक्य आहे;

---

१ तथा च सूत्रं तदव्यक्तमाहहि ।

२ न चक्षुषा पश्यति नापि वाचेति श्रुतेः । अदृश्यत्वादिगुणकोधर्मोक्तेरितिसू-त्राच्च । यत्तदद्रेश्यमग्राह्यमितिश्रुत्यंतराच्च ।

३ महत्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयत इति वचनं ।

४ अतोऽनंतेन तथा हि लिंगमिति सूत्रं । एषोऽणुरात्मा चेतसावेदितव्यः । मनसै-वाऽनुद्रष्टव्यमिति च ।

तर भक्तियुक्तश्रवण मननादिकांनीं मन उत्तमप्रकारचें झालें म्हणजे दर्शन होतें असें सांगतों. ] परमात्म्याचें रूप आपल्या इंद्रियांदिकांच्या साधनांनीं समजत नाहीं व कोणी ही इंद्रियादिकांच्या साधनांनीं त्याचें रूप पाहिलें नाहीं. [ ह्यावरून सर्वथा त्याचें रूप दिसत नाहीं कीं काय ह्याविषयीं सांगतों. ] प्रीतिपूर्वक भगवंताचे माहात्म्याचें ज्ञान असल्यानें, व भक्तिसहित श्रवण, मनन, इत्यादिकांनीं मन उत्तमप्रकारचें झाल्यानें, परमात्मा दर्शन देतो. जे कोणी भक्त आपल्या बिंबरूपी परमात्म्याला प्रत्यक्ष जाणतात ते मुक्त होतात. ह्या ऋचेनें ज्या प्रत्यक्ष ज्ञानानें मुक्ति मिळते तें मनानें प्राप्त होतें असें सांगितलें.

**अद्भ्यः संभूतोहिरण्यगर्भइत्यष्टौ ॥**

**टीका**—अपरोक्षज्ञानेन मुक्तिर्भवतीत्युक्तार्थदार्ढ्याय प्रदेशांतरगतमंत्रानुदाहरति ॥ अद्भ्यः संभूतइति ॥ अद्भ्यः संभूतः पृथिव्यैरसाच्चेत्यनुवाकः चातुर्होत्रीयपुरुषसूक्तमंत्रप्रकरणे समाम्नातः । तस्यानुवाकस्य प्रदर्शनार्थं **अद्भ्यः संभूतः** इति प्रतीकमिदं । तस्मिन्ननुवाके तमेव विद्वानमृतइहभवतीति परमात्मतत्वज्ञानिनां मुक्तत्वोक्तेः । **हिरण्यगर्भः** हिरण्यगर्भः समवर्त्तताग्रे **इति अष्टौ** ऋचः संहितायां चतुर्थकांडे प्रथमप्रपाठके समाम्नाताः ॥

**अर्थ**—[ परमात्म्याचे प्रत्यक्ष ज्ञानानें मुक्ति मिळते असा जो अर्थ पूर्वीं सांगितला त्याचें बळकटीस्तव उदाहरणादाखल दुसरेकडील मंत्र सांगतों. ] चातुर्होत्र पुरुषसूक्त मंत्रांमध्यें ‘ अद्भ्यः संभूतः पृथिव्यैरसाच्च ’ अशी श्रुति सांगितली आहे. ही श्रुति दर्शविण्यासाठीं ‘ अद्भ्यः संभूतः ’ हें प्रतीक घेतलें आहे. त्या अनुवाकांत असें सांगितलें आहे कीं, जो परमात्म्याला जाणतो तो मुक्त होतो. आणखी संहितेच्या चवथ्या कांडांतील पहिल्या प्रपाठकांत ‘ हिरण्यगर्भः समवर्तताग्रे ’ इत्यादि आठ ऋचा आहेत.

**एषहिदेवः प्रदिशोनुसर्वाः पूर्वोहिजातः सउगर्भेअंतः । सविजायमानः सजनिष्यमाणः प्रत्यङ्मुखास्तिष्ठतिविश्वतो मुखः ॥**

**टीका**—पूर्वंमुमुक्षुज्ञेयतयोक्तः परमात्मा सर्वत्राप्यस्तीति त्रयोदशीमृचमाह ॥ एषहिदेव इति ॥ **एषः** पूर्वोक्तः **देवः** क्रीडादिगुणविशिष्टः परमात्मा **हि सर्वाः प्रदिशः अनु** अनुसृत्य **पूर्वः जातः** अभिव्यक्तः **हि** इतिप्रसिद्धं । **सः उ** सएव **अंतः** ब्रम्हांडांतः **गर्भे च जातः** सुरनरतिर्यगाद्यंतर्यामितयापूर्वमभिव्यक्तः। **सः विजायमानः**[१] विविधतया इदानीमभिव्यक्तः **सजनिष्यमाणः** उत्पत्स्यमानब्रम्हादिविविधजीवांतर्यामितयाऽभिव्यज्यमानः **विश्वतोमुखः** सर्वव्यापकः । सर्वगश्चेत्परमात्मा सर्वैर्दृश्येतेत्यतआह ॥ प्रत्यङ्मुखाइति ॥ स्वयं विश्वतोमुखः अपि जनानां **प्रत्यङ्मुखः** अदृश्यः **तिष्ठति** ॥

**अर्थः**—[ मुमुक्षूंनीं जाणण्यास योग्य असा जो परमात्मा पूर्वीं सांगितला तोच सर्वव्यापी आहे असें सांगतो. ] पूर्वीं सांगितलेला क्रीडा करणारा परमात्मा सर्वव्यापी असून सर्वांच्या पूर्वीं प्रगट झाला. तोच परमात्मा ब्रम्हांडांत व देव मनुष्यें पक्षी ह्यांच्या आंत राहून सर्वांच्या पूर्वीं प्रगट झाला. तो नानाप्रकारचीं रूपें घेऊन प्रगट झाला आहे. तोच पुढें होणाऱ्या ब्रम्हादिक जीवामध्यें राहून प्रगट होणार आहे. [ जर तो सर्वव्यापक आहे तर तो सर्वांना दिसतो कीं काय हें सांगतो. ] तो सर्व व्यापक असूनही प्रत्येक प्राण्यास दृष्टिगोचर होत नाहीं.

**विश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोहस्तउतविश्वतस्पात् ।संबाहुभ्यांनमतिसंपतत्रैर्द्यावापृथिवीजनयन्देवएकः ॥**

**टीका**—प्रागुक्तं विश्वरूपत्वं किंचिद्विशदयति ॥ विश्वत इति ॥ **विश्वतश्चक्षुः** विश्वतः सर्वत्रविद्यमानं चक्षुर्नयनं ज्ञानं वा यस्यसः **उत** अपि च **विश्वतोमुखः** विश्वतः सर्वत्र मुखानि यस्य **विश्वतोहस्तः** सर्वत्र

---

१ ब्रम्हाणि ब्रम्हरूपोऽसौ शिवरूपी शिवोऽस्थित इत्यादि नानारूपत्ववचनात् ।

२ य आत्मनि तिष्ठन्नात्मनोंऽतरोयमात्मानवेदयस्यात्माशरीरं य आत्मानमंतरोयमयत्येषतआत्मांतर्याम्यमृतः । योविज्ञानेतिष्ठन्निति च श्रुतेः ।

३ सुपांसु लुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल इति सूत्रात् सुपोज स् प्रत्ययः ।

४ अनंतशीर्षोऽनंतबाहुरितिश्रुतेः । सर्वतः पाणिपादंतत्सर्वतोक्षिशिरोमुखं इति गीतावचनं च ।

विद्यमानाः बाहवः यस्येति **उत** अपि च **विश्वतस्पात्** सर्वत्रविद्यमानपादः **द्यावापृथिवी** चतुर्दशभुवनानि तत्स्थप्राणिनश्च **जनयन्** उत्पादयन् **एकः** समाधिकरहितः **देवः** परमात्मा **सम्** सम्यक् **बाहुभ्यां** दोर्भ्यां **पतत्रैः** पक्षैश्च **सम् नमति**[1] नमयति । अनया ऋचा विश्वरूपत्वं सर्वनियंतृत्वं च भगवतः प्रतिपादितं ॥

**अर्थ**—[ पूर्वी सांगितलेले सर्व व्यापकत्व आणखी स्पष्ट करून सांगतों. ] परमात्म्याचे डोळे सर्व व्यापक आहेत, त्याचीं मुखें सर्वव्यापक आहेत, त्याचे हात सर्वव्यापक आहेत, त्याचे पाय सर्वव्यापक आहेत. पृथिवी व स्वर्ग इत्यादि चवदा भुवनें व त्यांत राहणारे प्राणी उत्पन्न करून तो आपल्या हातांनीं व गरुडाच्या पक्षांनीं त्या सर्वांस स्वाधीन ठेवितो. ह्या ऋचेनें भगवंताला सर्व रूपें आहेत व तो सर्वांवर अंमल चालविणारा आहे असें सांगितलें.

**वेनस्तत्पश्यन्विश्वाभुवनानिविद्वान्यत्रविश्वंभवत्येकनीलं । यस्मिन्निदꣳसंचाविचैकꣳसओतःप्रोतश्चाविभुःप्रजासु ॥**

**टीका**—उक्तार्थेश्रद्धातिशयजननायआख्यायिकारूपान्मंत्रानाह ॥ वेन- इत्यादि ॥ **यत्र** यस्मिन्परमात्मनि **विश्वं** समस्तं प्रपंचादिकं **एकनीलं** एकाश्रयं संसारप्रलयेच **भवति** **तत्** ब्रह्म **विश्वाभुवनानि** **इति** **विद्वान्** अपरोक्षी कुर्वन् ज्ञानी **वेनः**[2] विपापः भवति । **यस्मिन्**[3] परमात्मनि **इदं** **एकं** पूर्वप्रकृतं **संचवि** स्थापितं **सः** **विभुः** परमात्मा वः **प्रजासु** प्राणिषु **ओतः प्रोतः च** अंतर्बहिर्व्याप्तः अस्ति । अनया ऋचा भगवतः सर्वाश्रयत्वं ज्ञानिनः सर्वपापाश्लेषः सर्वप्रजास्वंतर्बहिश्चविद्यमानत्वंचोच्यते ॥

**अर्थ**—[ पूर्वी जें सांगितलें त्यावर अतिशय विश्वास बसण्यास्तव

---

१ नमतेरंतर्णिच्नमयातिवशीकरोति ।

२ तद्यथापुष्करपलाशेआपोनश्लिष्यंतेएवमेवंविदिपापंकर्मनाश्लिष्यतइतिश्रुतिः । तदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतव्यपदेशादितिसूत्रंच ।

३ यस्मिन्नितिभावप्रधानोनिर्देशः

एक गोष्ट सांगतों. ] ज्या परमात्म्यामध्यें हें सर्व जगत् त्या एकाच्याच आश्रयानें राहिलें आहे, तो परमात्मा सर्व जगतामध्यें व्याप्त आहे असें जो जाणतो तो ज्ञानी पाप रहित होतो. ज्या परमात्म्यावर हें जगत स्थापित आहे तो परमात्मा तुम्हा आम्हा प्रजांचें रक्षण करणारा सर्व जगतामध्यें व्याप्त आहे. ह्या ऋचेनें भगवान हा सर्वांचा आश्रय आहे, ज्ञान्याला पापाचा संपर्क लागत नाहीं, व भगवान सर्व प्राण्यांच्या आंत व बाहेर आहे असें सांगितलें.

**प्रतद्वोचेअमृतंनुविद्वान्गंधर्वोनामनिहितंगुहासु ॥ ३ ॥**

**टीका**—तदेवोत्तरवाक्येन विव्रियते ॥ प्रतद्वोचइति ॥ ततः पूर्वोक्तं **अमृतं गुहासु** सर्वप्राणिहृदयगुहासु **निहितं** स्थितं ब्रह्म **विद्वान् गंधर्वः नाम** विश्वावसुर्वेनाख्योवाशिष्येभ्यः **तत्** ब्रह्म **प्रोचे नु** प्राह किल ॥ ३ ॥

**अर्थ**—[ हेंच पुढील वाक्यानें स्पष्ट सांगतों. ] पूर्वीं सांगितलेलें जरामरणरहित परब्रम्ह प्रत्येक प्राण्याच्या हृदयकमलरूपीं गुहेमध्यें आहे असें जाणणारा विश्वावसु नांवाचा अथवा वेन नांवाचा गंधर्व ह्यानें आपल्या शिष्यांना पूर्वीं सांगितल्याप्रमाणें ब्रम्ह आहे असा उपदेश केला ॥ ३ ॥

**त्रीणिपदानिहितागुहासुयस्तद्वेदसपितुष्पितासत् ।**
**सनोबंधुर्जनितासविधाताधामानिवेदभुवनानिविश्वा ॥**

**टीका**—उत्तरांऋचमाह ॥ त्रीणीति ॥ **गुहासु** ब्रम्हांडांतश्वेतद्वीपानंतासनवैकुंठेषु जीवहृदयगुहासु वा **त्रीणिपदा** त्रीणिपदानि अक्षयाभयामृताख्यानि विश्वतैजसप्राज्ञाख्यानि वा **निहिता** स्थापितानि **यः तत् वेद** जानाति **सः पितुः** सर्वोत्पादकस्य हरेः **पिता**[१] स्वरूपज्ञानजनकः **असत्** स्यात् । न केवलं तत्पिता किंतु अस्माकमपीत्याह ॥ सनोबंधुरित्यादिना ॥ **स** ब्रम्हज्ञानोपदेष्टा **नः** अस्माकं **बंधुः** बंधुरिवहितोपदेष्टा **जनिता** उपदे-

---

१ सवितुः पितासत् इत्यपिपाठः ।

२ तथाचसूत्रंअंशोनानाव्यपदेशादन्यथाचापिदाशकितवादित्वमधीयतएकेइति ।

शेनज्ञानोत्पादकः। **सः त्रिधाता** धारणपोषणादिकर्त्ता। **सः विश्वा** विश्वानिसमस्तानि **भुवनानि धामानि** तद्गतरूपाणि च **वेद** जानाति ॥

**अर्थ**—[ पुढील ऋचा सांगतों. ] ह्या ब्रम्हांडामध्यें श्वेतद्वीप, अनंतासन, वैकुंठ ह्या तीन स्थानांमध्यें परमेश्वराची क्रमानें अक्षय, अभय, अमृत अशीं तीन रूपें आहेत (अथवा प्रत्येक प्राण्याच्या हृदयगुहामध्यें विश्व, तैजस, प्राज्ञ अशीं परमेश्वराचीं तीन रूपें आहेत). असें जो जाणतो तो सर्वोत्पादक परमेश्वराचा उपदेश करणारा होतो. [ परमेश्वराच्या ज्ञानाचा उपदेश करणारा होतो येवढेंच नाहीं, तर तो आम्हा सर्वांचाही पिता होतो असें सांगतों. ] तो ब्रम्हाचा उपदेश करणारा आम्हांस सुद्धां बंधूप्रमाणें हित करणारा होऊन ब्रम्हज्ञानाचा उपदेश करितो व धारणपोषण इत्यादि करतो. तो ह्या चौदा भुवनांना व त्यांमधील भगवंताच्या नानाप्रकारच्या रूपांना जाणतो.

**यत्रदेवाअमृतमानशानास्तृतीयेधामान्यभ्यैरयंत। परिद्यावापृथिवीयंतिसद्यः परिलोकान्परिदिशः परिसुवः ॥**

**टीका—यत्र** यस्मिन् **तृतीये धामानि** वैकुंठे स्वर्गे वा **देवाः** पूर्वमुक्ताः स्वर्गस्थाः वा **अमृतं** अमृतमविनाशिस्वरूपानंदं मुक्तभोग्यं प्रसिद्धामृतं वा **आनशानाः** युंजानाः **अभ्यैरयंत** प्रेरयंतः। **द्यावापृथिवी** लोकद्वयं **सद्यः** प्रथमं **परियंति** आप्नुवंति। **लोकान्** भूरादीन् **परि** यंति प्राप्नुवंति। **दिशः** प्राच्याद्याश्च **परि** यंति प्राप्नुवंति। **सुवः** स्वर्गलोकं **परियंति** प्राप्नुवंति ॥

**अर्थ**—ज्या तिसऱ्या ठिकाणीं वैकुंठामध्यें पूर्वीं मुक्त झालेले जीव आपापल्या योग्यतेनुरूप आनंदाचा उपभोग घेऊन आपल्यापेक्षां कमी योग्यतेच्या जीवांचें नियमन करितात (अथवा स्वर्गामध्यें देव अमृताचा उपभोग घेऊन आपल्या योग्यतेपेक्षां कमी योग्यतेचे जीवांचें नियमन करतात), आणि त्यांना आकाश, स्वर्ग, प्रत्येक दिशा, व सर्वलोक प्राप्त होतात.

---

१ दीर्घश्छांदसः

**ऋतस्यतंतुंविततंविचृत्यतदपश्यत्तदभवत्प्रजासु। परीत्यलोकान्परीत्यभूतानिपरीत्यसर्वाः प्रदिशोदिशश्च। प्रजापतिःप्रथमजाऋतस्यात्मनात्मानमभिसंबभूव ॥**

**टीका—ऋतस्य** यथार्थज्ञानरूपस्य हरेः **प्रथमजाः** प्रथमजः पूर्वोत्पन्नः **प्रजापतिः** चतुर्मुखः **ऋतस्य** हरेः **तंतुं** अवताररूपं **प्रजासु विततं** व्याप्तं **विचृत्य** अन्विष्य **तत्** ब्रम्हस्वकारणं **अपश्यत्** साक्षात्कृतवान् **तत् अनु अभवत्** ब्रम्हप्राप्तवान् पुनः सः **लोकान्** भुवनादीन्तदभिमानिनश्च **परीत्य** सृष्ट्वा **भूतानि** पंचमहाभूतानि तदभिमानिनश्च सृष्टिकाले **परीत्य** सृष्ट्वाज्ञात्वा वा **सर्वाः दिशः** प्राच्याद्याः **प्रदिशः** आग्नेय्याद्याः तदभिमानिनश्च स्थितिकाले परीत्य रक्षित्वा **आत्मना** परमात्मना मनसा वा **आत्मानं** परमात्मानं **अभिसंबभूव** प्राप्तः सर्वतः सम्यक् प्राप्तवान् ॥

**अर्थ**—यथार्थज्ञानरूपी परमात्म्यापासून सर्वांच्या अगोदर उत्पन्न होणाऱ्या ब्रम्हदेवानें परमात्म्याचें जें अवताररूप सर्व प्रजांमध्यें व्यापलेलें आहे तेंच आपल्याला उत्पन्न होण्याचें कारण आहे असें जाणिलें. नंतर त्या परब्रम्हाची त्याला प्राप्ति झाली. नंतर त्यानें चौदा भुवनें व त्याच्या अभिमानि देवता, पंचमहाभूतें व त्यांच्या अभिमानी देवता सृष्टिकालीं उत्पन्न केल्यानंतर दिशा व अग्नेयादि दिशा इत्यादिक ह्यांचे स्थितिकालीं रक्षण करून तो आपल्या मनानें परमात्म्यामध्यें मिळाला.

**सदसस्पतिमद्भुतंप्रियमिंद्रस्यकाम्यं।सनिंमेधामयासिषं ॥**

**टीका—सदसः** सभायाः **पतिं** नायकं सभास्तारमुपेंद्ररूपमितियावत् **अद्भुतं** त्रिविक्रमादि विचित्रव्यापारकरणादाश्चर्यं **इंद्रस्य प्रियं** आनिमित्तोपकारादपेक्षितं **काम्यं** कामितार्थप्रदं **सनिं** कर्मफलदातारं जीवाद्भिन्नं वा **मेधां** धारणावतीं धियं **अयासिषं** एतादृशं धियं अहंयत्प्रसादादवाप्तवान् तं शरणमेमि ॥

**अर्थ**—सभेचा अधिपति, वामनावतारीं तीन पाऊलें मोठमोठीं एकदम करून आश्चर्य करणारा, इंद्राकडून कांहींएक उपकार करून घेत-

त्याशिवाय त्याचें कल्याण करणारा, नानाप्रकारच्या जीवांना त्यांच्या कर्मांचें फल देणारा, ज्याच्या प्रसादानें मला इतकी मोठी अवधान करणारी बुद्धि मिळाली त्या परमात्म्याला मी शरण जातों असा ब्रदह्मेव परमेश्वरास शरण गेला.

**उद्दीप्यस्वजातवेदोपघ्नन्निर्ऋतिंमम ॥ ४ ॥ पशूꣳश्चमह्य-मावहजीवनंचादिशोदिश ॥**

**टीका**—हे **जातवेद** जातं सर्वं वेत्तीति अग्निगत परशुराम **मम** अनिष्टकारिणीं पापाभिमानिनीं **निर्ऋतिं** राक्षसीं **उपघ्नन्** विनाशयन् **उद्दीप्यस्व** दह ॥ ४ ॥ ततः **मह्यं पशून्** द्विपाच्चतुष्पदादिरूपान् **च जीवनं** दीर्घायुषं अन्नपानादिलक्षणं जीवनोपयोगि वा **आवह** पूरय । **दिशः च** सुखनिवासदेशान् च **दिश** देहि ॥

**अर्थ**—हे अग्नीच्या अंतर्यामीं असणाऱ्या परशुरामा, तूं मला बहुत दुःख देणारी पापाची अभिमानी अशा राक्षशीचा नाश करून जाळून टाक ॥ ४ ॥ नंतर मला द्विपाद, चतुष्पाद इत्यादि पशु, चिरकाल आयुष्य व सुखानें राहण्याचे प्रदेश दे.

**मानोहिꣳसीज्जातवेदोगामश्वंपुरुषंजगत् । अबिभ्रद-ग्नआगहिश्रियामापरिपातय ॥**

**टीका**—अनिष्टनिवृत्तिं प्रार्थयते ॥ मानोहिꣳसीरिति ॥ हे **जातवेद** अग्न्यंतर्गतपरशुराम **नः** अस्माकं **गां** धेनुं तदुपलक्षितमहिष्यजादिकं **अश्वं** तदुपलक्षितहस्त्युष्ट्रादिकं **पुरुषं** पुत्रभृत्यादिकं **जगत्** उक्तातिरिक्तं बंधुजनादिकं **मा हिंसीः** मा विनाशय । हे **अग्ने** अग्न्यंतर्यामिन् हरे मदीयापराधादिकं **अबिभ्रत्** मनस्यधारयन् मद्रक्षणाय मां प्रति **आगहि** आगच्छ **मा** मां प्रति **श्रिया परिपातय** परितः प्रापय ॥

**अर्थ**—[ आपल्या अनिष्टाची निवृत्ति होण्यास्तव प्रार्थना करतों. ] हे अग्नीच्या अंतर्यामीं असणाऱ्या परशुरामा, आमच्या गायी, म्हशी, इ-

त्यादि; घोडा, हत्ती, इत्यादि; पुत्र, चाकर, इत्यादि; व ह्याशिवाय बाकी सर्व जगत, ह्या सर्वांचा नाश करूं नको. हे अग्नी, माझे सर्व अपराध मनामध्यें न ठेवतां माझ्या रक्षणाकरितां जवळ ये. मला सर्व ठिकाणची संपत्ति दे.

**पुरुषस्यविद्मसहस्राक्षस्यमहादेवस्यधीमहि । तन्नोरुद्रः प्रचोदयात् ॥**

**टीका**—इतःपरं गायत्रीद्वयेन रुद्रांतर्यामिणं भगवंतमर्थयते ॥ पुरुषस्येति ॥ **सहस्राक्षस्य**[1] अनंताक्षस्य **पुरुषस्य**[2] पुरुषं पुरुषरूपं वा **विद्म** जानीमहि । **महादेवस्य** महाक्रीडादिगुणविशिष्टत्वान्महत्वाद्वा महादेवशब्दितमहादेवांतर्गतस्य स्वरूपं **धीमहि** ध्यायेम । **तत्** तस्मिन् ध्याने **रुद्रः**[3] रुजंद्रावयतीति रुद्रशब्दवाच्योभगवान् **नः** अस्माकं **प्रचोदयात्** प्रेरयेत् ॥

**अर्थ**—[ ह्यापुढें दोन गायत्री मंत्रानें रुद्राच्या अंतर्यामीं असलेल्या भगवंताची प्रार्थना करितों. ] अनंत मस्तकें ज्यास आहेत अशा परमात्म्यास आम्ही जाणतों. अतिशय मोठा असल्या कारणानें किंवा क्रीडा करीत असल्या कारणानें ज्यास महादेव म्हणतात, त्याच्या मधील परमात्म्याचें आम्ही ध्यान करितों. रोगांचा नाश करतो ह्या कारणानें ज्यास रुद्र म्हणतात तो आमच्या मनाला प्रेरणा करो ( म्हणजे आमचें मन सन्मार्गाकडे लावो ).

**तत्पुरुषायविद्महेमहादेवायधीमहि । तन्नोरुद्रःप्रचोदयात् ॥**

**टीका**—**तत्पुरुषाय** तस्य पुरुषः पुरुबहुधा सूतेइति तत्पुरुषं **महा-**

---

१ तथाच श्रुतिः अनंतशीर्षोऽनंताक्षइति श्रुतिप्रामाण्याद् सहस्रशब्दोऽनंतपरः ।

२ पुरुषस्येति कर्तृकर्मणोःकृतीत्यनेन सूत्रेण कर्मणिषष्ठी ।

३ सहस्राक्षत्वादिनिरवकाशलिंगात्पुरुषशब्दाद्यपुरुषसूक्तसमाख्यानाच्च रुजंद्रावयतीतिवचनोक्तमहायोगविद्वद्रूढिभ्यां च भगवत्परत्वमवसीयते ।

**देवाय** महादेवं **विद्महे** जानीमः **धीमहि** ध्यायेम च । **तत्** तस्मिन् ध्याने **रुद्रः** रुद्रांतर्गतोभगवान् **नः** अस्माकं **मनः प्रचोदयात्** प्रेरयतु ॥

**अर्थ**—ज्याच्या अंतर्यामी परमात्मा आहे अशा महादेवाला आम्ही जाणतों व त्याचें ध्यान करतों. त्याचें ध्यान केल्यानें तो रुद्रांतर्यामी भगवान् आमच्या मनाला सन्मार्गानें जाण्याविषयीं प्रेरणा करो.

**तत्पुरुषायविद्महेवक्रतुंडायधीमहि । तन्नोदंतिःप्रचोदयात् ॥**

**टीका**—तृतीयां गायत्रीमाह ॥ तत्पुरुषायेति ॥ **तत्पुरुषाय** सचासौ पुरुषश्च तं वयं **विद्महे । वक्रतुंडाय** वक्राणि विषमाणि तुंडानि एकोनविंशतिसंख्याकानि तुंडानि मुखानि यस्य तं विनायकांतर्गतं विश्वरूपं **धीमहि** ध्यायेम । **तत्** तेन ध्यानेन **दंतिः** दंती विश्वतैजसयोर्गजमुखत्वात् **नः** अस्माकं मनः **प्रचोदयात्** प्रेरयतु ॥

**अर्थ**—[ तिसरी गायत्री सांगतों. ] त्या परमात्म्याला आम्ही जाणतों. जो एकोणीस मुखांचा आहे. त्या गजाननाच्या आंत राहणाऱ्या विश्वरूपी परमात्म्याच्या रूपाचें आम्ही ध्यान करतों. विश्व व तैजस ह्या दोहोंना हत्तीच्या तोंडासारखें तोंड आहे. त्या कारणानें त्यास दंती म्हटलें आहे, तो दंती आमच्या ध्यानानें आमचें मन चांगल्या मार्गाकडे लावो.

**तत्पुरुषायविद्महेवक्रतुंडायधीमहि । तन्नोनंदिःप्रचोदयात् ॥**

**टीका**—चतुर्थीं गायत्रीमाह ॥ तत्पुरुषायेति ॥ **तत्पुरुषाय** प्रसिद्धपुरुषाय **चक्रतुंडाय** चक्रवद्वर्तुलतुंडाय सर्वत्र चंक्रम्यमाणतुंडाय वा तं **विद्महे**

---

१ ईशनाद्देवचेशानोमहादेवोमहत्वतइतिस्मृत्युक्तेः ।

२ रुजंद्रावयतेयस्माद्रुद्रस्तस्माज्जनार्दनइतिस्मृतेः ।
ब्रम्हणिब्रम्हरूपोऽसौशिवरूपीशिवेस्थितइतिभारते ।

३ सप्तांगएकोनविंशतिमुखइतिमांडुक्योपनिषत् ।

जानीमः **धीमहि** ध्यायेम च । **तत्** तस्मिन् ध्याने **नंदिः** नंदीश्वरः तदंतर्गतः हृष्टः समृद्धः भगवान् **नः** अस्मान् **प्रचोदयात्** ॥

**अर्थ**—[ चवथी गायत्री सांगतों. ] ज्याचीं मुखें सर्व ठिकाणीं व्यापक आहेत अशा परमात्म्याला आम्ही जाणतों व त्याचें ध्यान करितों. त्या ध्यानानें नंदीश्वराच्या अंतर्गत असलेला भगवान् आमच्या मनाला सन्मार्गाकडे प्रेरणा करो.

**तत्पुरुषाय विद्महे महासेनाय धीमहि । तन्नः षण्मुखः प्रचोदयात् ॥**

**टीका**—षण्मुखस्थं भगवंतं पंचम्या तद्गायत्र्या प्रार्थयते ॥ तत्पुरुषायेति ॥ **तत्पुरुषाय** प्रसिद्धपुरुषाय **महासेनाय** महतीसेनादेवसेनायस्यसः तं **विद्महे** जानीमः **धीमहि** ध्यायेम च । **तत्** तस्मिन् ध्याने **षण्मुखः**[2] षट्ऐश्वर्यादिषड्गुणाः मुखानि प्रधानानि यस्य सः षड्गुणनामा तदंतर्गतोभगवान् **नः** अस्मान् **प्रचोदयात्** प्रेरयतु ॥

**अर्थ**—[ षडाननाच्या अंतर्यामीं असलेल्या परमात्म्याची प्रार्थना पांचव्या गायत्रीनें करतों. ] ज्याची देवसेना फार मोठी आहे अशा परमात्म्याला आम्ही जाणतों व त्याचें ध्यान करतों. त्या ध्यानानें षड्गुणऐश्वर्यसंपन्न अशा षडाननाच्या अंतर्यामीं असणारा परमात्मा प्रसन्न होऊन आमच्या मनाला चांगल्या मार्गानें जाण्याविषयीं प्रेरणा करो.

**तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि । तन्नो गरुडः प्रचोदयात् ॥**

**टीका**—गरुडांतर्गतं भगवंतं तद्गायत्र्या प्रार्थयते ॥ तत्पुरुषायेति ॥ **तत्पुरुषाय** प्रसिद्धं पुरुषं **विद्महे** जानीमः । **सुवर्णपक्षाय** सुवर्णः गरुडः

---

१ नदिहर्षेनदिसमृद्धावितिधातोर्भाविकप्रत्ययेनंदःतदस्यास्तीतिनंदीन्हस्वश्छांदसः ।

२ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णांभगइतीरणेति भागवतटीकायां ।

पक्षः[1] सहायः यस्य सः तं **धीमहि** ध्यायेम । **तत्** तस्मिन् ध्याने **गरुडः**[2] गरुद्भ्यां पक्षाभ्यां रोहतीति तदंतर्गतोभगवान् **नः** अस्मान् **प्रचोदयात्** प्रेरयतु ॥

**अर्थ**—[ गरुडांतर्यामीं असलेल्या भगवंताची गायत्रीनें प्रार्थना करतो. ] प्रसिद्ध परमात्म्याला आम्ही जाणतों. ज्याचें वाहन गरुड आहे त्याचें आम्ही ध्यान करितों. त्या ध्यानानें गरुडाच्या अंतर्यामीं असलेला भगवान् आमच्या मनाला उत्तम मार्गानें जाण्याची प्रेरणा करो.

**वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि । तन्नो ब्रम्ह प्रचोदयात् ॥**

**टीका**—हिरण्यगर्भांतर्गतं विष्णुं तद्गायत्र्याभीष्टमर्थयते ॥ वेदात्मनायेति[3] ॥ **वेदात्मनाय** वेदः आत्मनि यस्यासौ तं वेदगर्भांतर्यामिणं **विद्महे** जानीमः । **हिरण्यगर्भाय** हिरण्यं सुवर्णात्मकमंडं. गर्भः उत्पत्तिस्थानं यस्यासौ तं **धीमहि** ध्यायेम । **तत्** तस्मिन् ध्याने **ब्रम्ह** गुणपूर्णं ब्रम्हांतर्गतं भगवद्रूपं **नः** अस्माकं **मनः प्रचोदयात्** स्वविषयं कुर्यात् ॥

**अर्थ**—[ हिरण्यगर्भ म्हणजे ब्रम्हदेव ह्याच्या अंतर्यामीं असलेल्या भगवंताजवळ त्याच्या गायत्रीनें आपणास जें पाहिजे तें मागतों. ] ज्याच्या मनामध्यें वेद आहेत अशा वेदगर्भाच्या अंतर्यामीं असलेल्या परमेश्वराला आम्ही जाणतों. सुवर्णात्मकअंडापासून उत्पन्न झालेल्या ब्रम्हदेवाच्या अंतर्यामीं असलेल्या परमात्म्याचें आम्ही ध्यान करितों. त्या ध्यानानें गुणपूर्ण व ब्रम्हदेवाच्या अंतर्यामीं असलेला परमात्मा आमच्या मनाला आपल्याकडे ओढून घेवो.

**नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात् ॥**

---

१ पक्षः सहायेप्युष्णीष इति शब्दानुशासनं ।

२ गरुत्पदोपपदाद्रुहबीजजन्मनिप्रादुर्भावेइत्यस्मादिगुपधज्ञाप्रीकिरःकइति सूत्रेण क प्रत्ययः ।

३ वेदात्मनायेति छांदसःप्रयोगः ।

**टीका**—इतः परं गायत्रीद्वयेन विष्णुनारसिंहावर्थ्यते ॥ नारायणायेति ॥ **नारायणाय** गुणपूर्णत्वादिना नारायणनामानं **विद्महे** जानीमः । **वासुदेवाय** वासयति आच्छादयति स्वस्मिन् सर्वं वसति च सर्वत्रवेति तं **धीमहि** ध्यायेम । **तत्** तस्मिन् ध्याने **विष्णुः** सर्वव्यापको भगवान् **नः** अस्माकं मनः **प्रचोदयात्** स्वविषयं कुर्यात् ॥

**अर्थ**—[ ह्यापुढें दोन गायत्रींनीं विष्णु व नारसिंह ह्यांची प्रार्थना करितों. ] गुणांनीं परिपूर्ण अशा नारायणाला आम्ही जाणतों. सर्व जगताला आपल्यामध्यें ठेवणारा व आपण सर्वत्र रहाणारा अशा वासुदेवनामक परमात्म्याचें आम्ही ध्यान करितों. त्या ध्यानानें सर्वव्यापक विष्णुनामक परमात्मा आमचे मनाला दुसरेकडे जाऊं न देतां आपलेच ठिकाणीं लावो.

**वज्रनखायविद्महेतीक्ष्णदꣳष्ट्रायधीमहि । तन्नोनारसिꣳहःप्रचोदयात् ॥**

**टीका**—**वज्रनखाय** वज्रवत् अप्रतिहतानि नखानि यस्य सः तं **विद्महे** जानीमः । **तीक्ष्णदंष्ट्राय** तीक्ष्णाः दंष्ट्राः पार्श्वयोर्बहिर्निःसृताः दंताः यस्य तं **धीमहि** ध्यायेम । **तत्** तस्मिन् ध्याने **नारसिंहः** नरसंबंधित्वान्नारं शरीरादिकं नारमिव सिंह इव नारसिंहः **नः** अस्माकं **प्रचोदयात्** ज्ञानं मनो वा स्वविषयं कुर्यात् ॥

**अर्थ**—ज्याचीं नखें वज्राप्रमाणें क्रूर आहेत त्याला आम्ही जाणतों. ज्याचे सुळे फार तीक्ष्ण आहेत त्याचें आम्ही ध्यान करतों. त्या ध्यानानें मनुष्य व सिंह ह्या दोघांसारखें ज्याचें शरीर आहे असा नारसिंहरूपी पर-

---

१ अराः दोषाः नाराः गुणाः तेषां अयनं नारायणः ।

२ छादयामि जगद्विश्वं भूत्वा सूर्यइवांशुभिः । सर्वभूताधिवासश्च वासुदेवः स्वतोऽस्म्यहमितिवचनात् ।

३ व्याप्ते मे रोदसी पार्थ कांतिश्चास्याधिकामम ॥ अधिभूतनिवासश्च तेन विष्णुरहंस्मृतइति मोक्षधर्मे ।

मात्मा आमच्या मनाला आपल्याकडे लावून घेवो (अथवा आम्हाला ज्ञान देवो.)

**भास्करायविद्महेमहद्युतिकरायधीमहि । तन्नोआदित्यः प्रचोदयात् ॥**

**टीका—भास्कराय** भासः दीप्तीः करोतीति तं **विद्महे** जानीमः। **महद्युतिकराय** महश्च द्युतिश्च ते करोतीति तं **धीमहि** ध्यायेम । **तत्** तस्मिन् ध्याने **आदित्यः** अदितेः पुत्रः तदंतर्यामी भगवान् **नः** अस्माकं मनः **प्रचोदयात्** ॥

**अर्थ**—उत्तम दीप्तिमान् सूर्याच्या अंतर्यामीं असलेल्या भगवंताला आम्ही जाणतों. तेज व कांति ह्या दोहोंनीं युक्त असलेल्या परमात्म्याचें आम्ही ध्यान करतों. त्या ध्यानानें सूर्यांतर्यामीं असलेला परमात्मा आमच्या मनाला प्रेरणा करो.

**वैश्वानरायविद्महेलालीलायधीमहि । तन्नोअग्निः प्रचोदयात् ॥**

**टीका**—अग्न्यंतर्गतहरिंतद्गायत्र्याप्रार्थयते ॥ वैश्वानरायेति ॥ **वैश्वानराय[1]** विश्वनरसंबंधी तं **विद्महे** जानीमः। **लालीलाय[2]** ला हविरादयादानं लीला यस्य तं **धीमहि** ध्यायेम। **तत्** तस्मिन् ध्याने **अग्निः[3]** अंगस्य जगतः नेता अग्न्यंतर्यामी भगवान् **नः** अस्माकं मनः **प्रचोदयात्** स्वविषयकं कुर्यात् ॥

**अर्थ**—[अग्नीच्या अंतर्यामीं असलेल्या परमेश्वराची प्रार्थना अग्नीच्या गायत्रीनें करतों.] सर्व मनुष्यांच्या पोटांत राहणाऱ्या वैश्वानर नांवाच्या अग्नीला आम्ही जाणतों. हविपदार्थ खाणें ह्याच ज्या अग्नीच्या लीला

---

१ तथाच सूत्रं वैश्वानरः साधारणशब्दविशेषादिति । तथाच गीतासु अहं वैश्वानरोभूत्वा प्राणिनां देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधं ॥

२ लाआदानइतिधातोः कप्रत्यये टाप्लाशब्दः।

३ अंगानिनयतीति।

